नामात्मा " [ ऐ० आ० २ अ० ३ ख० ९ ] इति वक्ष्यमाणत्वात्। तेनाऽऽत्मना सहितैरवयवैः सर्वैरयं पुरुषः पञ्चविंशतिसंख्योपेतः। अतस्तादृशं पुरुषमृग्गतया पञ्चविंशतिसंख्यया संस्करोति।

प्रकारान्तरेण तां संख्यां प्रशंसति—

**अथो पञ्चविंशं वा एतदहः पञ्चविंश एतस्याह्नः स्तोमस्तत्समेन समं प्रतिपद्यते तस्माद्द्वे एव पञ्चविंशतिर्भवन्ति, इति।**

**अथो** अपि चेत्यर्थः। यन्महाव्रताख्यमहस्तदेतत्पञ्चविंशतिसंख्योपेतमेव। तत्कथमिति तदुच्यते—**एतस्याह्नो** यः **स्तोमः** सामगैः स्तोत्रकाले तृचस्याऽऽवृत्त्या संपद्यते सोऽयं त्रिवृत्पञ्चदशादिरूपो न भवति किंतु **पञ्चविंश**स्तस्मात्कारणात्पञ्चविंशतिसंख्यया **समेन** सूक्तेन पञ्चविंशस्तोमयुक्तं **समं** तदहः प्राप्नोतीति तस्माद्देतदहः सूक्तं चेत्युभयं **समं तस्मा**देते **द्वे** अहःसूक्ते पञ्चविंशतिसंख्याप्रयुक्ते एव भवतः। अन्यथा साम्यासंभवात्। **भवन्तीति** बहुवचनं तु सूक्तगतानामृचां स्तोत्रगतानां चापेक्षया द्रष्टव्यम्।

तस्मिन्सूक्ते प्रथमोत्तमयोर्ऋचोरावृत्तिविधिमभिप्रेत्य तदावृत्तिसहितां संख्यां प्रशंसति—

**तास्त्रिः प्रथमया त्रिरुत्तमयैकयानत्रिंशन्न्यूनाक्षरा विराण्न्यूने वै रेतः सिच्यते न्यूने प्राणा न्यूनेऽन्नाद्यं प्रतिष्ठितमेतेषां कामानामवरुद्ध्यै, इति।**

**ताः** सूक्तगताः पञ्चविंशतिसंख्याका ऋचस्त्रिरावृत्तया **प्रथमया** त्रिरावृत्तया चोत्त**मया** सहिताः सत्यो मिलिता एकोनत्रिंशत्संख्याकाः संपद्यन्ते। एकयर्चा न संपूर्णा त्रिंशदित्येकयानत्रिंश[त्। " त्रिंश]दक्षरा विराट् " इति श्रुतेर्विराट्छन्दसस्त्रिंशत्संख्योपेतत्वादत्र त्रिंशत्संख्यायामेकया न्यूनत्वादियमृक्संख्या **न्यूनाक्षरा विराट्**संपद्यते। लोकेऽपि **न्यूने वै** स्वल्प एव गर्भाशये प्रजोत्पादनार्थं **रेतः सिच्यते**। तथा स्वल्पे हृदयपुण्डरीके **प्राणाः** प्रति[ति]ष्ठन्ति, स्वल्पे चोदरे**ऽन्नाद्यं प्रतिष्ठितं**, तस्मादियं न्यूना विराडे**तेषां** प्रजोत्पत्तिप्राणान्नप्रतिष्ठारूपाणां **कामानां** प्राप्त्यै संपद्यते।

यथोक्तार्थवेदनं प्रशंसति—

**एतान्कामानवरुन्धे य एवं वेद, इति।**

**यः** पुमानेवमृग्गतामेकोनत्रिंशत्संख्यां वेद स पुमानुक्तान्कामानाप्नोति। वेदनमात्रेण फलप्राप्तिर्यजुर्वेदार्थप्रकाश उपपादिता।

प्रकारान्तरेण सूक्तगता ऋचः प्रशंसति—

**ता अभिसंपद्यन्ते बृहतीं च विराजं च**